॥ श्रीः॥

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम्

# ईशावास्योपनिषद्भाष्यम्

॥ॐ॥ नित्यानित्यजगद्धात्रे नित्याय ज्ञानमूर्तये ।
पूर्णानन्दाय हरये सर्वयज्ञभुजे नमः ॥१॥
यस्माद्ब्रह्मेन्द्ररुद्रादिदेवतानां श्रियोऽपि च ।
ज्ञानस्फूर्तिस्सदा तस्मै हरये गुरवे नमः ॥२॥

स्वायम्भुवो मनुरेतैर्मन्त्रैर्भगवन्तमाकूतिसूनुं यज्ञनामानं विष्णुं तुष्टाव । 'स्वायम्भुवस्स्वदौहित्रं विष्णुं यज्ञाभिधं मनुः । ईशावास्यादिभिर्मन्त्रैस्तुष्टावाऽवहितात्मना । रक्षोभिरुग्रैस्सम्प्राप्तः खादितुं मोचितस्तदा । स्तोत्रं श्रुत्वैव यज्ञेन तान्हत्वाऽवध्यतां गतान् । प्रादाद्धि भगवांस्तेषामवध्यत्वं हरः प्रभुः। तैर्वध्यत्वं तथान्येषामितः कोऽन्यो हरेः प्रभुः' इति ब्रह्माण्डे । भागवते चायमेवार्थ उक्तः । ईशस्यावासयोग्यमीशावास्यम् । जगत्यां प्रकृतौ । तेनेशेन त्यक्तेन दत्तेन भुञ्जीथाः ॥ 'स्वतः प्रवृत्त्यशक्तत्वादीशावास्यमिदं जगत् । प्रवृत्तये प्रकृतिगं यस्मात्स प्रकृतीश्वरः । तदधीनप्रवृत्तित्वात्तदीयं सर्वमेव तत् । तद्दत्तेनैव भुञ्जीथा अतो नान्यं प्रयाचयेत्' इति ब्रह्माण्डे ॥१॥

---

॥ **ईशावास्योपनिषत्** ॥

॥ हरिः ॐ॥ ईशावास्यमिदँ सर्वं यत्किंच जगत्यां जगत् । तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम् ॥१॥ कुर्वन्नेवेह कर्माणि जिजीविषेच्छतँ समाः । एवं त्वयि

अकुर्वतः कर्म न लिप्यत इति नास्ति । 'अज्ञस्य कर्म लिप्येत कृष्णोपास्तिमकुर्वतः । ज्ञानिनोऽपि यतो ह्रास आनन्दस्य भवेद् ध्रुवम् । अतोऽलेपेऽपि लेपस्स्यादतः कार्यैव सा सदा' इति नारदीये ॥२॥ सुष्टु रमणविरुद्धत्वादसुराणां प्राप्यत्वाच्चासुर्याः । 'न च रमन्त्यहो असदुपासनयाऽऽत्महनः' इत्युक्तत्वात् । 'महादुःखैकहेतुत्वात् प्राप्यत्वादसुरैस्तथा । असुर्या नाम ते लोकास्तान्यान्ति विमुखा हरौ' इति च वामने । ये के चेति नियम उक्तः । 'नियमेन तमो यान्ति सर्वेऽपि विमुखा हरौ' इति च ॥३॥ 'अनेजन्निर्भयत्वात्तदेकं प्राधान्यतस्तथा । सम्यग्ज्ञातु-मशक्यत्वादगम्यं तत्सुरैरपि । स्वयं तु सर्वानगमत्पूर्वमेव स्वभावतः । अचिन्त्यशक्तितश्चैव सर्वगत्वाच्च तत्परम् । द्रवतोऽत्येति संतिष्ठत्तस्मिन् कर्माण्यधान्मरुत् । मारुत्येव यतश्श्रेष्टा सर्वा तां हरयेऽर्पयेदि'ति ब्रह्माण्डे । ऋष ज्ञाने ॥४॥ तदेजति तत एव एजत्यन्यत् । तत्स्वयं नैजति । 'ततो बिभेति सर्वोऽपि न बिभेति हरिः स्वयम् । सर्वगत्वात्स दूरे च बाह्योऽतश्च समीपगः' इति तत्त्वसंहितायाम् ॥५॥ 'सर्वगं परमात्मानं सर्वं च परमात्मनि। यः पशयेत्स भयाभावान्नात्मानं गोप्तुमिच्छति' इति सौकरायणश्रुतिः ॥६॥ यस्मिन्परमात्मनि सर्वभूतानि स परमात्मैव तत्र सर्वभूतेष्वभूत् । एवं सर्वभूतेष्वेकत्वेन परमात्मानं विजानतः को मोहः । 'यस्मिन्सर्वाणि भूतानि स आत्मा सर्वभूतगः । एवं सर्वत्र यो विष्णुं पश्येत्तस्य विजानतः । को मोहः कोऽथवा शोकः स विष्णुं पर्यगाद्यतः' इति पिप्पलादशाखायाम् ।

---

नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥ २ ॥ असुर्या नाम ते लोका अन्धेन तमसाऽऽवृताः । ताँस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः ॥ ३ ॥ अनेजदेकं मनसो जवीयो नैनद्देवा आप्नुवन्पूर्वमर्षत् । तद्धावतोऽन्यानत्येति तिष्ठत्तस्मिन्नपो मातरिश्वा दधाति ॥ ४ ॥ तदेजति तन्नैजति तद्दूरे तद्वन्तिके । तदन्तरस्य सर्वस्य तदु सर्वस्य बाह्यतः ॥ ५ ॥ यस्तु सर्वाणि भूतान्यात्मन्येवानु पश्यति । सर्वभूतेषु चात्मानं ततो न विजुगुप्सते ॥ ६ ॥ यस्मिन्त्सर्वाणि भूतान्यात्मैवाभूद्विजानतः । तत्र को मोहः कश्शोक एकत्वमनु

पूर्वोक्तानुवादेन शोकमोहाभावोऽपि विजानतश्चात्रोच्यते । अभ्यासश्च सर्वगतत्वस्य तात्पर्यद्योतनार्थः ॥७॥ 'शुक्रं तच्छोकराहित्यादव्रणं नित्यपूर्णतः । पावनत्वात्सदा शुद्धमकायं लिंगवर्जनात् । स्थूलदेहस्य राहित्यादस्नाविर मुदाहृतम् । एवं भूतोऽपि सार्वज्ञात्कविरित्येव शब्द्यते । ब्रह्मादिसर्वमनसां प्रकृतेर्मनसोऽपि च । ईशितृत्वान्मनीषी स परिभूः सर्वतो वरः । सदाऽनन्याश्रयत्वाच्च स्वयम्भूः परिकीर्तितः । स सत्यं जगदेतादृङ्गित्यमेव प्रवाहतः । अनाद्यनन्तकालेषु प्रवाहैकप्रकारतः । नियमेनैव ससृजे भगवान्पुरुषोत्तमः । सज्ज्ञानानन्दशीर्षोऽसौ सज्ज्ञानानन्दबाहुकः । सज्ज्ञानानन्ददेहश्च सज्ज्ञानानन्दपादवान् । एवं भूतोमहाविष्णुर्यथार्थं जगदीदृशम् । अनाद्यनन्तकालीनं ससर्जात्मेच्छया प्रभुः' इति वाराहे ॥८॥ 'अन्यथोपासका ये तु तमोऽन्धं यान्त्यसंशयम् । ततोऽधिकमिव व्यक्तं यान्ति तेषामनिन्दकाः । तस्माद्यथास्वरूपं तु नारायणमनामयम् । अयथार्थस्य निन्दां च (९॥१०) ये विदुस्सह सज्जनाः । ते निन्दयाऽयथार्थस्य दुःखाज्ञानादिरूपिणः । दुःखाज्ञानादिसन्तीर्णाः सुखज्ञानादिरूपिणः । यथार्थस्य परिज्ञानात्सुखज्ञानादिरूपताम् । या(११)न्त्येवं सृष्टिकर्तृत्वं नाङ्गीकुर्वन्तिये हरेः । तेऽपि यान्ति तमो घोरं तथा संहारकर्तृताम् । नाङ्गीकुर्वन्ति तेऽप्येवं तस्मात्सर्वगुणात्मकम् । सर्वकर्तारमीशेशं सर्वसंहारकारणम् ॥ १२ ॥१३॥

---

पश्यतः ॥७॥ सपर्यगाच्छुक्रमकायमव्रणमस्नाविरँ शुद्धमपापविद्धम् । कविर्मनीषी परिभूस्स्वयम्भूर्याथातथ्यतोऽर्थान्व्यदधाच्छाश्वतीभ्यस्स माभ्यः ॥ ८॥ अन्धंतमः प्रविशंति येऽविद्यामुपासते । ततो भूय इव ते तमो य उ विद्यायाँ रताः ॥९ ॥ अन्यदेवाहुर्विद्यया अन्यदाहुरविद्यया । इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥ १० ॥ विद्यां चाविद्यां च यस्तद्वेदोभयँ सह । अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥ ११ ॥ अन्धंतम प्रविशन्ति येऽसम्भूतिमुपासते । ततो भूय इव ते तमो य उ संभूत्याँ रताः ॥ १२ ॥ अन्यदेवाहुस्सम्भवादन्यदाहुरसम्भवात् । इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥ १३ ॥ सम्भूतिं च विनाशं च यस्तद्वेदोभयँ सह । विनाशेन मृत्युं तीर्त्वा संभूत्याऽमृतमश्नुते

यो वेद संहृतिज्ञानात् देहबन्धाद्विमुच्यते । सुखज्ञानादिकर्तृत्व-ज्ञानात्तद्व्यक्तिमाव्रजेत् । सर्वदोषविनिर्मुक्तं गुणरूपं जनार्दनम् । जानीयान्न गुणानां च भागहानिं प्रकल्पयेत् । न मुक्तानामपि हरेस्साम्यं विष्णोरभिन्नताम्। नैव प्रचिन्तयेत्तस्माद्ब्रह्मादेस्साम्यमेव वा । मानुषादिविरिञ्चान्तं तारतम्यं विमुक्तिगम्। ततो विष्णोः परोत्कर्षं सम्यग्ज्ञात्वा विमुच्यते' इति कौर्मे ॥१४॥ 'पात्रं हिरण्मयं सूर्यमण्डलं समुदाहृतम् । विष्णोस्सत्यस्य तेनैव सर्वदाऽपिहितं मुखम् । तत्तु पूर्णत्वतः पूषा विष्णुर्दर्शयति स्वयम् । सत्यधर्माय भक्ताय (१५) प्रधानज्ञानरूपतः । विष्णुरेकऋषिर्ज्ञेयो यमो नियमनाद्धरिः । सूर्यस्स सूरिगम्यत्वात्प्राजापत्यः प्रजापतेः । विशेषेणैव गम्यत्वा(१६)दहं चासावहेयतः । अस्मि नित्यास्तितामानात्सर्वजीवेषु संस्थितः । स्वयं तु सर्वजीवेभ्यो व्यतिरिक्तः परो हरिः । स क्रतुर्ज्ञानरूपत्वादग्निरङ्गप्रणेतृतः' इति ब्रह्माण्डे । सत्यं ब्रह्म हृदये धारयतीति सत्यधर्मा । एकोऽसौशब्दः प्राणे स्थित इति ॥१७॥ यस्मिन्नयं स्थितः सोऽप्यमृतः किमु परः । अः ब्रह्मैव निलयनं यस्य वायोः सोऽनिलम् । 'अतिरोहितविज्ञानाद्वायुरप्यमृतः स्मृतः । मुख्यामृतः स्वयं रामः परमात्मा सनातनः' इति रामसंहितायाम् ॥ १८ ॥ भक्तानां स्मरणं विष्णोः

---

॥ १४ ॥ हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् । तत्त्वं पूषन्नापावृणु सत्यधर्माय दृष्टये ॥ १५ ॥ पूषन्नेकर्षे यम सूर्य प्राजापत्य व्यूह रश्मीन्त्समूह तेजो यत्ते रूपं कल्याणतमतत्ते पश्यामि ॥ १६ ॥ योऽसावसौ पुरुषस्सोऽहमस्मि ॥ १७ ॥ वायुरनिलममृतमथेदं भस्मान्तँ शरीरं ॥ १८ ॥ ॐ क्रतो स्मर कृतँ स्मर ॥ ॐ क्रतो स्मर कृतँस्मर ॥ १९ ॥ अग्ने नय सुपथा राये अस्मान्विश्वानि देववयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नम उक्तिं विधेम ॥ २० ॥

**॥ ईशावास्योपनिषत् समाप्ता ॥**

नित्यज्ञप्तिस्वरूपतः । अनुग्रहोन्मुखत्वं तु नैवान्त्कचिदिष्यते' इति ब्रह्मतर्के ॥१९॥ वयुनं ज्ञानम् । 'त्वद्दत्तया वयुनयेदमचष्ट विश्वम्' इति वचनात्। जुहुराणं अस्मान् अल्पीकुर्वत् । युयोधि वियोजय। 'यदस्मान्कुरुते-ऽत्यल्पांस्तदेनोऽस्मद्वियोजय । नय नो मोक्षवित्तायेत्यस्तौद्यज्ञमनुस्स्वराट्' इति स्कान्दे । युयु वियोग इति धातुः । भक्तिज्ञानाभ्यां भूयिष्ठां नमउक्तिं विधेम ॥२०॥

पूर्णशक्तिचिदानन्द श्रीतेजःस्पष्टमूर्तये ।
ममाभ्यधिकमित्राय नमो नारायणाय ते ॥१॥

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं**
**ईशावास्योपनिषद्भाष्यं समाप्तम् ॥**
**॥ श्रीकृष्णार्पणमस्तु ॥**
*******